कुलसंस्तवबन्धनयुक्तो यस्तु प्रमत्त सदा ग्रहचित्तः ।
ज्ञानविवर्जित मूढमतिश्च बध्यति एभि अयुक्तचारिभिः ॥

यो खलु इच्छति दुःखभयेभ्यो जातिजरामरणादिविमोक्षम् ।
सो अवनन्धनबन्धन त्यक्ता युज्यति बोधिपथे सततं च ॥

दुःखमनन्त सहित्वमशेषं सर्वसुखादनपेक्षि भवित्वा ।
त्यक्त प्रियाप्रियज्ञात्रमशेषं बुद्ध भवन्ति विशल्यप्रधीराः ॥

षट्सु प्रयुज्यन पारमितासु भूमिगुणेषु बलेन्द्रियध्याने ।
सर्वगुणेषु सदा समुपेता बुद्ध भवेज्जरपञ्जरमुक्तः ॥

कल्प अचिन्तिय पूर्व चरन्तः सत्वहिताय चरान्वरबोधौ ।
दानदमे नियमे ऽपि च नित्यं सुस्थित आसी त्यजित्व च ज्ञातीन् ॥

प्रान्तवने सद नित्य रतो ऽहं शोधित आशयु बोधिनिदानम् ।
न च संसृतु वीर्य कदाचिद्दपित ज्ञान महापुरुषाणाम् ॥

भवचारकि जगति दृष्ट्वा पञ्चगतिभ्रमभ्रामितसत्वान् ।
कृत्व कृपा विपुलामिह पूर्वे आर्जित बोधि बलाज्जगदर्थे ॥

दुहितृस्वसुताः[1] प्रियभार्यास् त्यक्त पुरा धनधान्य प्रभूताः ।
शोधित इष्ट [8 a] मही सुसमृद्धा एषत बोधिवरां बहुकल्पान् ॥

फलपुष्पजलाढ्य सुरम्य आसि वने मुनि क्षान्तिरतो ऽहम् ।
छिन्न करौ चरणौ कलिराज्ञा नैव मनो ऽपि तदा मम दुष्टम् ॥

1) MS सुता.

वनकन्दरि श्यामकु नाम आसि मुनिर्निरतो गुरु जीर्णौ ।
दृष्ट्वा व्याकुलेन नृपेण नैव मनः परिदूषितमासीत् ॥

शीलतटादनपेक्ष्य शरीरं प्रोत्सृजतश्च सुभाषितहेतोः ।
क्वापि न च मे न च जीवे बोधिनिमित्तमपेक्ष्य बभूव ॥

व्याघ्रिसुतानपि जीवितहेतोस् त्यज्य तनुं परितर्पित व्याघ्री ।
गगने ऽभ्यनदन्सुरसंघाः साधु महापुरुष स्थिरवीर्य ॥

अतिदानरतश्च यदासीत् माणव पूर्वभवेषु चरंश्च ।
शोषितु रत्ननिदानसमुद्रः प्राप्य मणिं सुखिनाः कृत सत्वाः ॥

सुतसोम महीपतिरासीत् विश्रुतकीर्त्ति चरंश्च यदाहम् ।
वध्यगतं कृतकृत्यनधैर्मे राजशतं परिमोचितमासु ॥

दुःखित वीक्ष्य नरं च दरिद्रं त्यक्त मया प्रियमेव शरीरम् ।
प्राप्य धनं स कृतश्च मयाढ्यः सर्वददेन नृपेण सता मे ॥

शरणागत वीक्ष्य कपोतं स्वं पिशितं विनिकृत्य शरीरात् ।
दत्तमपि स्वतनुर्न भयार्तन् त्यक्त इहापि नृपेण सता मे ॥

कृतमनुवार्त्तितनाम्य ऋषिभिर्नैपक्षनप्रतिनं मम पूर्वम् ।
जीवित त्यज्य पारस्य ददौ सं केसरिराज बभूव यदाहन् ॥

चाता च पुरा अगदर्वे गाढ पतितम त्यक्त तनुना ।
दुश्चिलाप्यनपेक्ष्यदसेव आसि नृपात्मजो यद सुदृष्टः ॥

वर्षसहस्र मया परिपूर्णा नर्पित दुष्करचारनुयाशोति ।
उत्तमवीर्यु यद आसीत् सर्वधनाभियो जनि च पुरा मे ॥

जिनधातुस्तूपसुरतो मे ज्वलित आसनः परमभक्त्या ।
पूजा कृता दशबलानाम् आसि नृपात्मजो विमलतेजाः ॥

रौद्रत एव च कुपित्वा याचितवान् स चापि मम शीर्षम् ।
दत्तं निकृत्य च मया तद् राज यदा च चन्द्रप्रभ आसीत् ॥

सर्वत्र पत्तननगरेषु वीथिमुखेषु भैषज्यमुदारम् ।
सत्त्वार्थ स्थापित मया ते पुण्यतनो बभूव च यशाह्वम् ॥

स्त्रीणां सहस्रमभिरूपाः काञ्चनमुक्तिभूषितशरीराः ।
त्यक्ता पूर्व[1] भवेषु चरता मे आसि यदा शुभो नृपति पूर्वे ॥

पुष्पैर्वरैरपि च गन्धैः काञ्चनमुक्तिका[2]प्रवरक्षौमान् ।
त्यक्तश्च मे मकुट पूर्व आसि नृपो यदा रत्नचूडः ॥

मृडतूलपिचू[8b]पमसूक्ष्मौ कोमलपद्मपत्र[3]सुकुमारौ ।
त्यक्तौ करौ सचरणौ मे पूर्व नृपेण धृतिमता च ॥

विनिगृह्य राक्षसिगणानि निर्घृणदारुणप्रबलचण्डा ।
कृत मानुषा वरद्वीपे सिंहल सार्थवाह यद आसीत् ॥

कामेषु मूर्च्छितमना मे आसि स राक्षसी प्रमदसंज्ञा ।
पञ्चशतानि वणिजानां मोचित ते यदाभवे सुनेत्रः ॥

चत्वारि कोटि प्रमदानाम् अप्सरतुल्यरूपिणां विहाय ।
प्रव्रज्य निर्गतु जिनस्य शासने पुण्यरश्मि यद आसीत् ॥

1) पूर्व est à supprimer, metri causa.
2) MS. मुक्तिभूषितं.
3) MS. °पत्रौ.

अपि त्यक्तमङ्गुलि उदारा सत्त्वहितार्थमेव चरता मे ।
जालार्चिता विमलशुद्धा काञ्चनवर्णा पार्थिव यदासीत्[1] ॥

शुभ नीलपद्मसमवर्णा नेत्र मनोरमा हृदयकान्ता ।
त्यक्ता मया च जगदर्थे उत्पलनेत्र पार्थिव यदासीत् ॥

प्रियविप्रयोगदुःखित दृष्ट्वा स्त्री च प्रणष्टरूपमतिवेषा[2] ।
परिमोचिता करुणाया मे केशव वैद्यराज यद आसीत् ॥

व्याध्यातुरं च नरमीक्ष्य स्वं रुधिरं प्रदत्तमपि मे ऽभूत् ।
निर्व्याधितः स च कृतो मे प्राणभृत सर्वदर्शि यदभूवम् ॥

छित्वा स्वमस्थि च शरीराद्‌ व्याधिकृशस्य मज्ज मया दत्तम् ।
न च सत्त्व त्यक्त मम जातु आसि नृपो यदा कुसुम नाम ॥

सर्वं स्वकोशमपि त्यक्त्वा जीवित त्यक्त मे प्रिय मनापम् ।
नरु मोचितो व्यसनप्राप्त आसि नृपो ऽर्थसिद्धि यद पूर्वम् ॥

चक्राङ्कितं कमलतुल्यं पाणियुग प्रदत्तमनपेतम् ।
नृप आशुकेतु यद आसीद्‌ बोधिमभीप्समान जगदर्थे ॥

नृप सर्वदर्शि यद आसीत् कारुणिको जनार्थहितकामः ।
त्यक्ता मया चतुरो ऽपि च द्वीपाः स्फीतनरैर्वरनारीगणैश्च ॥

मृदु कोमलं विमलगौरं ऊरु तच्छिन्न[3] दृष्ट्व रुदिताया ।
दत्तं स्वमांस रुधिरं मे ब्राह्मणी यदासि नृपपुत्री ॥

1) MS यद् आसीत्  2) MS वेषा.  3) Corr. hṛta°.

कनकाभयौनसुकुमारां त्यक्त्वा स्तनद्वयं हृदयकान्तम् ।
स्त्री प्रेत्य मे तुषतुषार्ते साह्यप्यत्रलीति वनिता यदाभूत् ॥

वरभूषणानपि सुरम्यान् रत्नमनेकावस्त्ररथयानान् ।
संत्यक्त दुस्त्यजमनेकं विश्रुतश्रीनृपेण च मयाभूत् ॥

राज्ञः सुतो तु विकृतज्ञस् तगरित सागराग्यदृकृतज्ञः ।
रत्नार्थ नेत्र मन तेन उद्धृत नैव मे तृषित चित्तम् ॥

माभूत्पिपीलिकावधो मे त्यक्त वराश्रयो ऽपि चनपेदय ।
न च चित्त कम्पित तदा मे पूर्वभवेषु गोध यद आसीत् ॥

उपस्थानगौरवातो ऽहं वृद्धचरोषु नित्य रत आसीत् ।
न च मा[9a]नवानपि च स्तब्ध आसि कपिञ्जलो विचरमाणः ॥

शरणागतस्य च मयार्थे त्यक्त समुच्छ्रयः कृप जनित्वा ।
न च त्यक्त वानरगतेन व्याधनरः शराभिनिहतेन ॥

गजवशगतेन शोधितो मे तनुरपि वृद्धगुरुं जगत्स्मरित्वा ।
सुरुचिरमशनं मया न भुक्तं मोक्षित आत्म गजा यदा तदासीत् ॥

सतपतिरभूव शैलदुर्गे हिमवन्त सप्तदिनानि रक्षितो मे ।
पुरुष वधकु तेन म प्रयुक्तो न च प्रतिघात कृतश्च मे तदास्मिन् ॥

(1) आसि गजो हिमकुन्दनिकाशो बोधिवराश्रित बुद्धगुणार्थी ।
स विषेण शरेण च विद्धो दंष्ट्रवरांस्त्यजमान न द्विष्टः ॥

1) Mètre: Dodhaka.

वनगोचरि खड्गकद्वीपे तित्तिरिपोतक मैत्रविहारी।
सह दर्शनेन समितो ऽपि देवगणा कुसुमानि क्षिपन्ति॥

गङ्गतरङ्गजलैर्ह्रियमाणः तारित मे यद् आसि मृगत्वे।
वधका मम तेनुपनीता नैव मनो मम तत्र प्रदुष्टम्॥

तारित पञ्चशतं वणिजानां सागरमध्यगताश्च धनार्थाः।
तैश्च हतः सुखितैश्च तदाहं कच्छपयोनिगतो ऽपि च मैत्रः॥

बोधिचरिं चरमाणक पूर्वं मत्स्य बभूव यदा जलचारी।
त्यक्त मयाश्रय सत्त्वहिताय भक्षित प्राणिसहस्रशतेभिः॥

व्याधिशताभिहतं जगदीक्ष्य भेषजभूतसमुच्छ्रय कृत्वा।
सर्व कृताः सुखिता निरुजाश्च प्राणकु सौम्य तदा च यदासीत्॥

सिंह बभूव यदा मृगराजा स्थामबलान्वित कारुणिकश्च।
विद्ध शरेण न दूषित चित्तं मैत्रि तदा वधके ऽपि तदा मे॥

शङ्खतुषारनिभो हयराजा आसि पुरा च समुद्रतटे ऽहम्।
राक्षसिमध्यगता वणिजो मे तारित कृत्व कृपां करुणां च॥

बोधिचरिं चरमाण सनार्थं आसि कुणाल अहं यद पक्षी।
वर्जित कामगुणा बहुदोषा नो च वशं प्रमदान गतो ऽहम्॥

आसि शशो वनगुल्मनिवासी लालित तं मुनिते शशवर्गान्।
मुनिरामनवासि क्षुधार्तस्तस्य कृतेन मयात्मपु त्यक्तः॥

आसि शुको द्रुम पुष्पफलाढ्ये शुष्कद्रुमो न च मे स हि त्यक्तः।
दृष्ट्व कृतज्ञ तदा मम शक्रस्तं कृतवांस्तरु पत्रफलाढ्यम्॥

वानरसंघमुपद्रुत दृष्ट्वा नागनृपेण विवर्जितदेशम् ।
राजभयात्तु विमोचित ते मे वानरराज अहं यद आसीत् ॥

शुक भूत पुरा गुरुहेतोः शालि हरंश्च नरेण गृहीतः ।
किं नु शुका हरसे मम शालि नाशयसे [9 b] ऽपि च पत्नि मुशस्यम्[1] ॥

शुक सो ऽब्रवीदहं शृणुष्व चौर्य हरामि न ते ऽहु शालिम् ।
जीर्णगुरुद्वयपोषणहेतोः शालि हरामि कृपार्थ तु तेषाम् ॥

बीज प्रकीर्ण यदा प्रथमं ते भागं[2] ददामि सर्वजनस्य ।
तच्च गिरं वदतो मम श्रुत्वा तेनापि चौर्य भवेन्न कदाचित् ॥

साधु शुका हर शालि यथेष्ट दुर्लभ मानुष यस्यिमु भक्तिः ।
मानुष त्वं यथ तीर्यगतेह्वा साधु दमः शम संयम तुभ्यम् ॥

इत्येवमादिचरितानि पूर्व चरन्त दुष्करकृतानि ।
न च मे मनसि तत्रभवि खेद एषत उत्तमां विरजबोधिम् ॥

आध्यात्मिकं ह्यथ च बाह्यं नास्ति हि वस्तु यन्मया न दत्तम् ।
शीले च क्षान्ति तथ वीर्य ध्यान उपाय प्रज्ञ चरितो ऽहम् ॥

मांसं त्वचं तथपि च मज्ज शोणितमेव दत्तं स्वशरीरात् ।
प्राप्ते गुहासु च यदा मे शोषित आश्रयो ऽपि चरता मे ॥

धुतयान[3] देशित जिनेभिः यत्र प्रयुज्यतो जिन भवन्ति ।
तत्र धुते सततं च प्रयुक्तो आसि चरन्त पुरे ऽहक नित्यम् ॥

---

1) Corr. *masasyam* (= matsasyam).
2) MS भागु ददामि सर्वजनस्य.
3) MS. धुन.

एतादृशा व्रत उदारा ये च निषेविता चरता मे ।
श्रुत्वा च तेषमिमाश्चर्यमेकपदे न भविष्यति छन्दः ॥

क्षान्तु भविष्यति इम श्रुणित्वा शासनमेतदेव च तदानीम् ।
आहारमैथुनपरास्ते मिद्धसदाभिभूत शतकाङ्क्षाः[1] ॥

धर्मद्विषः सद अनार्याः शासनदूषका गुणविहीनाः ।
श्रुत्वा च धर्ममिम शान्तं नैष जिनोक्त इत्यभिवदन्ति ॥

आचार्यो मे श्रुतसनुज्ञो आसि चङ्क्रमुतः कथिकश्रेष्ठः ।
तेनापि चैष प्रतिषिद्धो बुद्धवचो हि नैष तु कथंचित् ॥

परतो ऽप्यभूदपि च वृद्धः तस्य गुरुः स शामितगुणौघः ।
तेनापि नैष हि गृहीतो मात्र प्रयुज्यथ विसयमेतत् ॥

यत्रात्म नास्ति न च जीवो देशित पुद्गलो[2] ऽपि न कथंचित् ।
व्यर्थः श्रमो ऽत्र घटते यः शीलप्रयोग संवरक्रिया च ॥

यद्यस्ति चैव महायानं नात्र हि आत्मसत्त्व मनुजो वा ।
व्यर्थः श्रमो ऽत्र हि कृतो मे यत्र न चात्मसत्त्वउपलब्धिः ॥

याचितानि हैव स्वयमानि पापनतैः कुतीर्थिकमतैश्च ।
भाषेत मो जिन कदाचित् वाचमिमां हि भिक्षुपरिभाषान् ॥

अपत्राप[3]शीलरहिताश्च धाष्टर्यप्रगल्भउद्धतप्रचण्डाः ।
भविता हि भिक्षव ममेह शासनि ईर्ष्यानमददग्धाः ॥

---

1) MS. घाङ्गाः

2) MS. पुद्गला

3) MS. ह्रीरपत्राप्य Il faut lire sans doute *hrir apatrapa*, le premier de ces mots étant une glose marginale introduite dans le texte.

विध्यन्त हस्त तथा पादाद्यीघाट्कर्णाक्ता निधुनन्तः।
कायापकण्ठ विचरन्ता ग्रामकुलेषु मद्यमदमत्ताः ॥

बुद्धस्य ते ध्वज गृहीत्वा सेवकारा[1] गृहस्थजनतायाम्।
लेखं वहन्ति सततं ते शासनं विहाय गुणराशिम् ॥

गोगर्दभाश्वपशुदासात्मभवने[2] [10a] हि दास्य पि तेषाम्।
कृषिकर्मवाणिज्यप्रयोगा[3] पुत्रमनाश्च ते ऽनिशमनार्याः ॥

नैपाननार्यमपि वाच्यं नैव च किंचिदस्ति यदकार्यम्।
स्तौपिक सांघिकं ह्यपि च वित्तं पौद्गलिकं च तत्र सममेषाम् ॥

भिक्षुण वीक्ष्य च गुणाढ्यं तेष्वपि चाप्यवर्ण कथयन्ति।
दुःशीलत्रयक प्रविश्य कुलास्ते स्त्री च विनाशयन्ति हि सुघोराः[4] ॥

गृह्णो गृहीण तथा कामैर्यादृशे प्रव्रजित ते गृह्णाः।
भार्याः सुता दुहितरश्च तेषु भविष्य गृहिसमानम् ॥

यत्रैव सत्कृत कुले ते चीवरपिण्डपातपरिभोगैः।
तस्यैव दारपरिगृह्य क्लेशवशानुगाः सद ह्यनार्याः ॥

कामा इमे खलु न सेव्याः[5] पातन[6] तिर्यक्प्रेतनिरयेषु।
वक्ष्यन्ति ते सद गृहीणां ते च स्वयमदान्त ह्यनुपशान्ताः ॥

---

1) MS सेवकाराजगृह°.
2) MS गोत्र्पगर्दभाश्वपशुदा संभजते
3) MS. °कर्मविक्रय
4) MS. सुघोरः
5) MS सत्र्याः.
6) Corr. *pātana*

स्वयमेव ते यत्र अदान्ताः शिष्यगणो ऽपि तेष न सुदान्तः ।
* आहारमैथुनकथायां रात्रिदिवानि तेषु गमिष्यन्ति ॥

सेवार्थमेव न गुणार्थं ते खलु संग्रहं ददति तेषाम् ।
शिष्यगणैः स्वकैः परिवृतो ऽहं पूज्य इति मदात्र चल मिथ्य ॥

कथयन्ति ते ऽपि च जनस्य संग्रह एष मे करुणयैषाम् ।
उपस्थान प्रार्थयामि तेभ्य शिष्यगणेभ्य[1] एव न कदाचित् ॥

रोगाभिभूतमङ्क तत्र कुष्ठिलाश्चित्रगात्रसुविद्रूपाः ।
प्रव्रजिष्यन्ति नरकेषु[2] आगता आगता सह अनार्याः ॥

उद्देशसंस्तरविहीना भिक्षुगुणेषु ते सह विमुक्ताः ।
गृहिणो न ते ऽपि न च भिक्षू वर्जित ते यथा श्मशान इव दारुः ॥

शिक्षासु चादर न तेषां स्यात् न च प्रतिमोक्षविनये वा ।
उद्भ्रमगाः स्ववशगास्ते अङ्कुशमुक्ता इव गजेन्द्राः ॥

वनवासिनामपि हि तेषां ग्रामगतं भविष्यति हि चित्तं ।
क्लेशाग्निना प्रचलितानां चित्तमवस्थितं हि न च तेषाम् ॥

विस्मृत्य बुद्धगुणवर्णान् शिलधुताश्च ते ऽपि च उपायान् ।
मदमानदर्पपरिपूर्णा ते प्रपतन्ति दारुणमवीचीम् ॥

राजकथारताश्च सततं ते चोरकथाभिकीर्तनरताश्च ।
ज्ञातिनिवेशने च निरतास्ते चिन्तयन्ति रात्रिदिवसानि ॥

1) MS शिल°.
2) MS नरतेषु

ध्यानं तथाध्ययनं त्यक्त्वा नित्य विहारकर्मणि नियुक्ताः ।
आवासगृध्रभृकुटीकास्ते च प्रदात्तशिष्यपरिवाराः ॥

न च कर्मिको ह्यहं विहारे आत्मनहेतुरेष हि कृतो मे ।
ये भिक्षवो ममानुकूलास्तेष्ववकाशमस्ति हि विहारे ॥

ये शीलव[10b]न्त गुणवन्तो धर्मधरा ज्ञानार्थमभियुक्ताः ।
दमसंयमे सतत युक्ताः संमर्द तेषु ते न कुरुते च ॥

लयनं ममैतदुद्दिष्टं सार्धविहारिणो ऽपि च ममेदम् ।
संमोदिकस्य च ममेदं गच्छ न ते ऽस्ति वास इह कश्चित् ॥

शय्यासनं निखिलदत्तं भिक्षवः स्थापिता इह प्रभूताः ।
न च लाभसंभव इहास्ति किं परिभोक्ष्यसे ऽत्र त्वम भिक्षो ॥

शय्यासनोद्दिशन तेषां नैव भविष्यते ऽपि च कदाचित् ।
गृहिसंचयाश्च भवितारस्ते च प्रभूतभाण्डपरिवाराः ॥

निर्भर्त्सितापि च समन्तात्ते हि ममौरसाश्चरिमकाले ।
वचनं न चैते मम हि स्मृत्वा प्रान्तवने तदाभिनिवसन्ति ॥

हा शासनं जिनवरस्य नाशमुपेष्य हि न चिरेण ।
लाभाभिभूतगुणद्विष्टा भिक्षवः प्रादुर्भूत बहु यत्र ॥

परिभूतकाश्च सततं ते पश्चिमकालि शीलगुणयुक्ताः ।
ते चाप्यरण्यवनवासी ग्राम विहाय राष्ट्रनगराणि ॥

सद सत्कृता गुणविहीना भेदकसूचकाः कलहकामाः ।
ते शास्तृसंमत जनस्य ते च भविष्यन्ति मानमददग्धाः ॥

इम शासनं गुणनिधानं सर्वगुणाकरं परमरम्यं[1] ।
नाशं प्रयास्यति ममेह शीलविपत्तिरीर्ष्यमददोषैः ॥

रत्नाकरो यथ विलुप्तः स्यास्यति पद्मिनीव परिशुष्का ।
पूर्ण वाररत्नमयं भग्नं नश्यति शासनं चरिमकाले ॥

एतादृशश्चरिमकाले धर्मविलोप वर्तति सुघोरः[2] ।
न चापि भित्व अदात्ता नाशयितार शासनं ममेदम् ॥

इम चर्यसेवनिरतानां[3] दूरत संगतिः क्वचन तेषां ।
प्रेतगतिर्नरके ऽपि च वासः तिर्यगतिश्च इतो हि च्युतानाम् ॥

अनुभूय तीव्रकटुकानि दुःखमनन्त वर्षशतमनेकैः ।
लब्ध्वा स मानुषभवं वा जायति दुःखितः सतत शोच्यः ॥

अन्धो ऽथवा बधिर काणो जायति चित्रगात्र सुविरूपा ।
बीभत्सरूपभयदर्शी पापचरोभिना सतत सेवी ॥

विस्रम्भते ऽस्य न च कश्चित् श्रद्दधते ऽस्य चापि न च वाक्यम् ।
निर्भर्त्सितो भवति नित्यं यो ऽभिनिषेवते विषमचर्याम् ॥

ते रोगदुःखव्यसनग्रस्तास्ताडित लोष्टकाष्ठप्रहारेभिः ।
तृष्णाग्नेन परितप्तास्ते च भवन्ति सदा सुपरिभूताः ॥

दुःखा अनन्त इति ज्ञात्वा दूर पापचर्य विवर्जित्वा ।
मैत्रेय भावयरि नित्यं मा भवितानुताप इह पश्चात् ॥

---

1) MS. °रम्याः
2) MS. एतादृशाश्च° सुघोरैः
3) MS. सव

यस्य प्रियो भवति बुद्धो आर्यगणाश्च जिनधुतधर्मा ।
अभियुज्यथा सततमेव त्यक्त च आत्मना[11a]भयशकीर्ति ॥

मायोपमं हि दुरमेतत्स्वप्नसमं च संस्कृतमवोद्यम् ।
न चिराद्भविष्यति वियोग सर्वप्रियैर्न नित्यमिह कश्चित् ॥

उद्युञ्जना घटत नित्य पारमितासु भूमिषु बलेषु ।
मा जातु स्रंसयत वीर्य यावन्न बुध्यथा प्रवरबोधिन् ॥

निदानपरिवर्त प्रथम ॥

---

# II.

## द्वितीयः परिवर्तः

यद्रूपस्ता राष्ट्रपाल बोधिसत्त्वयानीयानां पुद्गलानामिमे दोषा भविष्यन्ति । अनभियुक्ता अनभियुक्तान् पूजयिष्यन्ति शठाः शठान् पूजयिष्यन्ति अज्ञा अज्ञान्सत्कर्तव्यान्मन्यन्ते । आमिषप्रियाश्च भविष्यन्ति । अध्यवसानबहुलाः कुलमत्सराः शठा ध्वाङ्क्षा मुखराः[1] कुहका पात्रगुरुकाः । अन्योन्यवर्णभाषणतया लाभं निष्पादयिष्यन्ति लाभपर्येष्ट्यर्थं च ते ग्रामं प्रवेक्ष्यन्ति न सत्त्वपरिपाकार्थं न सत्त्वानुकम्पार्थं । ते अज्ञानिनो ज्ञाननिमित्तात्मानं प्रतिज्ञास्यन्ति । कथं मां परे विजानीयुः बहुश्रुतः कल्याणधर्म इति । अगौरवाश्च भविष्यन्ति यथात्रानभियुक्ताः । भिन्नभाजनीभूता भविष्यन्ति अन्योन्यस्खलितगवेषिणः । नष्टप्रयोगा अक्षणाः कुसीदाशया नवकल्पनबहुलाः । अन्योन्यभिन्नधर्मसंभाषणतया स्वच्छन्दा दृढवैरा आकीर्णव्यापादा अयुक्तपरिभाषाज्ञनसंज्ञया इह शासने चरिष्यन्त्यपरिपृच्छनशीलाः । धर्मश्रवणानर्थिकाः । अयुक्तचर्यया दरिद्रकुलेषूपपत्तिं परिगृह्णीष्यन्ति ते दरिद्रकुले प्रव्रजिताः समाना लाभमात्रकेणेह शासने तुष्टिमुत्पादयिष्यन्ति । तेषामत्ययदेशनापि न भविष्यति किं पुनर्ज्ञानाभिसमयः । ते बुद्धगुणानिति विज्ञाय लाभमात्रकेण श्रमणा स्म इत्यात्मानं प्रतिज्ञास्यन्ति । नाहं राष्ट्रपाल तेषां तथारूपाणां पुद्गलानामानुलोमिकामपि क्षान्तिं वदामि कुतः पुनर्बुद्धज्ञानं । सुगतिस्तेषां दूरे किं पुनर्बोधिः । तेषां पुना राष्ट्रपाल तथारूपाणां पुद्गलानामष्टौ बोधेः परिपन्थकरान्धर्मान्वदामि । कतमानष्टौ । अक्षणोपपत्तिः दरिद्रकुलोपपत्तिः प्रत्यन्तजनपदोपपत्तिः नीचकुलोपपत्तिर्दुर्वर्णतान्धतगतिकाः पापमित्रजनप्रधानं षड्गान्यता विषमा परिहाणि कालक्रियाः । इमान्राष्ट्रपाल अष्टौ धर्मान्बोधेः परिपन्थकरान्वदामि । तत्कस्य हेतोः । नाहं राष्ट्रपाल शयनप्रति-

1) MS मुपराः

ज्ञस्य बोधिमिति वदामि। न कुहकस्य चर्यापरिशुद्धिं वदामि। न शठस्य बोधिचर्यां वदामि। नामिषगुरुकस्य बुद्धपूजां वदामि। नाभिमानिनः प्रज्ञापरिशुद्धिं वदामि। नाहं दुष्प्रज्ञसमन्वागतस्य संशयच्छेदनं वदामि। नाहं मत्सरिण आशयपरिशुद्धिं वदामि। नाहमनधिमुक्तिबहुलस्य धारणीप्रतिलाभं वदामि। नाहमसद्गुणपर्येषकस्य सुगतिप्रतिलाभं वदामि। न कुलमत्सरस्य कायपरिशुद्धिं वदामि। नाहमकल्पितार्यपथस्य बुद्धसमवधानं वदामि। न कुलाध्यवसितस्य वाक्परिशुद्धि वदामि। न गौरवस्य चित्तपरिशुद्धिं वदामि। नाहममात्रज्ञस्य धर्मकामतां वदामि। न कायजीवितसापेक्षस्य धर्मवेष्टिं वदामि। नाहं राष्ट्रपाल पश्चात्तांस्तथा विगर्हामि यथा तान्मोघपुरुषान्विगर्हामि। तत्कस्य हेतोः। अन्यथावादिनस्ते ऽन्यथाकारिणः। विसंवादकाः सदेवकस्य लोकस्य॥

अथ खलु भगवांस्तस्यां वेलायामिमा गाथा अभाषत।

(1) असंयता उद्धत उन्नताश्च अगौरवा मानिन लाभ उत्सदा।
क्लेशाभिभूताः सखिलाः सकिंचनाः सुदूर ते तादृश अग्रबोधये॥

लाभाभिभूतस्य कुसीद वर्धते कुसीदभूतस्य प्रणष्ट श्रद्धा।
श्रद्धाविपन्नस्य प्रणष्ट शीलं दुःशीलभूतस्य प्रणष्ट संगतिः॥

दरिद्रभूताश्च हि प्रव्रजित्वा दारिद्र्यमुक्ता समवाप्य पूजाम्।
तैः काञ्चनो भारमिवापविद्धः ससस्य भारः पुनरुद्गृहीतः॥

लाभार्थिको(2) ऽरण्यमुपेति वस्तुं गवेषते तत्र गतश्च ज्ञातीन्।
अभिज्ञाविद्याप्रतिभानसंपदो(3) विहाय गृह्णाति स चापि ज्ञातीन्॥

अपायभूमिं गतिमक्षणेषु दरिद्रतां नीचकुलोपपत्तिम्।
ज्ञात्यन्धदौर्बल्यमथाल्पस्थामतां गृह्णन्ति ते मानव शेषमूढाः॥

---

1) Mètre Upajāti, Indravaṃçā, Vaṃçastha.
2) MS लाभातिको 3) MS संपदा - ज्ञातून्

ते वृत्तिचर्यापरिहीनभावाः प्रमादलाभेन स्मृतिप्रणष्टाः ।
घोरं प्रयास्यन्ति महाप्रपातं यतो न मोक्षोऽस्त्यपि कल्पकोटिभिः ॥

यदीह लाभेन भवेत बोधिस्तदेवदत्तोऽपि लभेत बोधिम् ।
वैरम्भवातेन यथैव पत्रं क्षिप्यन्ति लाभेन तथा प्रयुक्ताः ॥

पुण्यैर्विहीनाः परदारगृद्धा अशुद्धशीलाः कुशलेषु खोडाः ।
ते शासने ऽनर्थशतान्यकुर्वन् ये बोधिचित्तेन अलब्धस्थानाः ॥

बोध्यर्थिको ऽन्वेषति बुद्धधर्मान् न तिष्ठते चापि यथा समीरितः ।
दृढः स लेपेन कृतः कपिर्वा मानाभिभूतस्य तथैव बोधिः ॥

बोध्यर्थिकेनापि मया स्वजीवं त्यक्तं प्रियं धर्मपदस्य हेतोः
त्यक्त्वा च धर्मास्त अयुक्तयोगाः निरर्थभूता निपतन्ति शासनम् ॥

महा[12a]प्रपातं ज्वलितं हुताशनं सुभाषितार्थे पतितोऽस्मि पूर्वे ।
श्रुत्वा च तस्मिन् प्रतिपत्तिये स्थितो विहाय सर्वाणि प्रियाप्रियाणि ॥

श्रुत्वा गुणांश्च विचित्रशासनं तेषां स्पृहा नैकपदेऽपि जायते ।
अधर्मकामस्य कुतोऽस्ति बोधिः यथैव चान्धस्य पथि प्रकाशनमिति ॥

---

भूतपूर्वं राष्ट्रपालातीते ऽध्वन्यसंख्येयैः कल्पैरसंख्येयतरैरचिन्त्यैरतुल्यैरप्रमाणैर्विपुलैरप्रमेयैर्यदासीत्तेन कालेन तेन समयेन सिद्धार्थबुद्धिर्नाम तथागतो ऽर्हन्सम्यक्संबुद्धो लोक उदपादि विद्याचरणसंपन्नः सुगतो लोकविदनुत्तरः पुरुषदम्यसारथिः शास्ता देवमनुष्याणां च बुद्धो भगवान्। तेन च समयेनार्चिष्मान्नाम राजाभूत्। अर्चिष्मतः पुना राष्ट्रपाल राज्ञो जम्बुद्वीपे राज्यमभूत्षोडशयोजनानन्तरमाणि । तेन च राष्ट्रपाल कालेन तस्मिञ्जम्बुद्वीपे

विंशतिनगरसहस्राण्यभूवन्सर्वाणि कुलकोटिसहस्रिकाणि। तस्य खलु पुना राष्ट्रपाल राज्ञो ऽर्चिष्मतो रत्नप्रभासं नाम नगरमभूद्राजधानी यत्र स राजार्चिष्मान्प्रतिवसति । द्वादश योजनान्यायामेन पूर्वेण पश्चिमेन च सप्त योजनानि विस्तरेण दक्षिणोत्तरेण च सप्तानां रत्नानां च सप्तप्राकारमष्टापदसुकृतं । तेन च समयेन दशवर्षकोटिनियुतानि सत्त्वानामायुप्रमाणमभूत् । राज्ञः पुना राष्ट्रपालार्चिष्मतः पुण्यरश्मिर्नाम पुत्रो ऽभूदभिरूपः प्रासादिको दर्शनीयः परमशुभवर्णपुष्कलतया समन्वागतः । तस्य जातमात्रस्यैव निधानसहस्रं प्रादुर्भूतं सप्तानां रत्नानामेकं चात्र निधानं राज्ञः प्रासादे प्रादुर्भूतं दशयोजनप्रमाणं सप्तानां रत्नानां। तस्य खलु पुना राष्ट्रपाल पुण्यरश्मे राजकुमारस्य जातमात्रस्यैव सर्वे जाम्बूद्वीपकाः सत्त्वा आत्तमनसो ऽभूवन्। ये च सत्त्वा बन्धनगतास्तेषां बन्धनमोक्षो ऽभूत्। तेन खलु पुना राष्ट्रपाल पुण्यरश्मिना राजकुमारेण सप्तभिर्दिवसैः सर्वशिल्पान्यधिगतानि यावन्ति लौकिकानि ।

अथ खलु राष्ट्रपाल पुण्यरश्मे राजकुमारस्य शुद्धावासकायिका देवता अर्धरात्रकालसमये संचोदयन्ति स्म । अप्रमत्तेन ते कुमार सदा भवितव्यम् । अनित्यताप्रत्यवेक्षणाकुशलेन भवितव्यम् । अल्पं हि कुमार जीवितं मनुष्याणां गमनीयः सम्परायः परलोकभयदर्शिना च ते भवितव्यं न कर्मक्रियोद्धरेण । तस्यां वेलायामिमा गाथा अभाषत ।

[1] मा कुमार भव सुप्रमत्तको मा प्रमादवशमभ्युपेष्यसे ।
अप्रमाद सुगतेन वर्णितो निन्दिता हि सुगतैः प्रमत्तकाः ॥

अप्रमत्त इह ये च सूरता दानसंयमरता [12b] अमच्छराः ।
सर्वसत्त्वकृपमैत्रमानसा ते भवन्ति नचिरा नरोत्तमाः ॥

ये प्रमेयसुगता अतीताः सांप्रतं च हि येऽप्यनागताः ।
सर्व एव कुशलैस्त उद्गता अप्रमादपथ एव सुस्थिताः ॥

---

1) Mètre Rathoddatā.

धनधान्यमथ वस्त्रभोजनं हेमरत्नमपि मुक्तिभूषणम् ।
दत्त तैरपि च कल्पकोटिभिः प्रार्थयद्भिरिह बोधिमुत्तमाम् ॥

हस्तपादमथ कर्णनासिका याचिता ददति संप्रहर्षिताः ।
सर्वबोधिगुणपूरिताशयास् ते भवन्ति नचिरा नरोत्तमाः ॥

राज्यभोग्यविभवाश्च सर्वशो विप्रहाय दयिता स्त्रियोऽपि च ।
रङ्गमापसदृशं हि संस्कृतं संप्रपश्य वनमेव निःस्पृह ॥

जीवितं चपलमध्रुवं सदा मृत्तिकाघटक एव भेदि च ।
याचितोपममशाश्वतं सदा नात्र नित्यमशुभे कुमारक ॥

नेह माता न पिता न बान्धवा धारयन्ति पतमान दुर्गतिम् ।
यत्कृतं हि मनुजैः शुभाशुभं तत्प्रयान्तमनुयाति पृष्ठतः ॥

कामहेतु बहुकल्पसागरा धन्यमन्यजनधिना निरर्थकाः ।
कस्यचिच्च कृतं त्वया हितं व्यर्थ एव च निवेशितः श्रमः ॥

यैश्च[1] ते जगत एषतो हितं बोधिशालमतुलं पदोत्तमम् ।
मज्ज मांसमपि चर्म शुष्यते यद्यपि त्वमपि माकृथा भ्रमम् ॥

दुर्लभो हि सुगतस्य संभवः शान्तधर्मश्रवणं सुदुर्लभम् ।
मारपतनवधूप यत्नतो बुद्धज्ञान नचिरेण लप्स्यसे ॥

भद्रमित्रपरिसेवकः सदा पापमित्रपरिवर्जको भव ।
सत्पथे उपनयन्ति ते सदा दुर्गतौ च सततं निवारकाः ॥

---

1) MS यैम्च

साधु वीर्यमपि कृत्य सुस्थिरं कायजीवितस्पृहां विहाय च।
यत्नाल्पकृद्दया दृढाशया बुद्धमार्गमिममेव सुश्रुतन् ॥

दुर्लभं पदवरं ह्यनुत्तरं सर्व एव पुरिमा नरोत्तमा।
अरण्यगोचररताः प्रभंकराः तेष त्वं चर[1] पथेऽनुवर्तकः ॥

अरण्यवासनिरतः सदा भव मातृपुत्रपितृबान्धवान् प्रियान्।
विप्रहाय सकलं सुहृज्जनम् कायजीवितकृतामपि तृष्णाम्।
एषताय विपुलं सुगतज्ञानसंचयम् एषता पदवरं ह्यनुत्तरम् ॥

अथ खलु राष्ट्रपाल पुण्यरश्मी राजकुमारस्तत उपादाय दशभिर्वर्षैर्न जातु स्त्यानमिद्धमवक्रामितवान्न जातु हसितवान्न क्रीडितो न रमितः न परिचारितो न जातूद्यानभूमिं गतो न जातु सखायान् दृष्ट्वा विस्मितः। न जातु गीताभिलाष्यभूत्। न राज्यधनगृहनगरेषु स्पृहामुत्पादितवान्। एवं सर्ववस्तुषु अनपेतोऽभूत्। एकप्रध्यायमानः स्थितोऽभूत् प्रतिसंलीनः परमदौर्बल्यभावं विचिन्तयन्। असारमित्वरं च लोकमनाश्वसन्[2]। अप्रियसमवधानं[13a] प्रियविनाभावं बालोल्लापनं संसाररतिनिरास्वादं राज्यसुखं विमोक्षधर्मं भवाभिष्टं शमतुष्टं पृथग्जनत्वं सदा विरुद्धं। बालपृथग्जनमध्यगतोऽस्मि यन्न्वहं तूष्णीभावेनातिनामयेयं। स एकान्ते तूष्णीभूतः ' अप्रमादं विचिन्तयन् प्रियविनाभावमेकाकी विहरति स्म।

अथ खलु राष्ट्रपाल राज्ञार्चिष्मता अन्यतरस्मिन् पृथिवीप्रदेशे रतिप्रदानं नाम नगरं मापितमभूत्कुमारस्य परिभोगार्थम्। दक्षिणेनोत्तरेण च सप्त वीथीशतानि सप्तभिः प्राकारैः समन्ततोऽनुपरिक्षिप्तमभूत्सप्तरत्नमयैः किङ्किणीजालसमुच्छ्रितैर्मुक्ताजालरत्नपट्टिवितानैः सर्वेषु च वीथीमुखेषु अशीतिरत्नपट्टिसहस्राणि स्थापितान्यभूवन् सर्वस्यां च रत्नपथ्यां षष्टिरत्नसूत्रसहस्राणि निबद्धान्यभूवन् सर्वत्र च रत्नसूत्रे चतुर्दश

1) MS. चरि.

2) MS. अनास्वासन्.

तालपङ्क्तिकोट्यो निबद्धान्यभूवन् । यासां वातेनेरितानां यानसंघट्टितानां तद्यथापि नाम तूर्यशतसहस्रस्य घोषशब्दः स्यात् । सर्वेषु च वीथीमुखेषु पञ्च पञ्च कन्याशतानि स्थापितान्यभूवन् गीतकुशलानि नृत्तकुशलानि प्रथमयौवनप्राप्तानि सर्वजगत्परिभोग्यानि । तासां च राज्ञा चिन्तिता आज्ञा दत्ताभूत् । रात्रिंदिवं भवतीभिर्नान्या कथा कार्या अन्यत्र नृत्तगीतवादितेन । सर्वे[1] रञ्जयितव्या ये केचिच्चतुर्षु दिक्ष्वागच्छन्ति । अप्येवं नाम कुमारस्य रतिचित्तमुत्पद्येत । न च कस्यचित् सत्त्वस्यापनायं वक्तव्यं । तेषु च पुनः सर्ववीथीमुखेषु श्रमणब्राह्मणार्थिकेभ्यो दीयते पानं पानार्थिकेभ्यः । यानं यानार्थिकेभ्यो यावद्वस्त्रगन्धमाल्यविलेपनशय्योपाश्रयजीवितपरिष्कारं सुवर्णरूप्यमणिमुक्तावैडूर्यशङ्खशिलाप्रवाडजातरूपरजतस्य च राशयो धनं सर्वाभरणं रत्नराशयश्च स्थापिता अभूवन्सर्वजनपरिभोगार्थं ॥

तेन च समयेन मध्ये नगरस्य समन्ततो योजनं गृहं कुमारस्य मापितमभूत्परिभोगाय सप्तानां रत्नानामष्टापदनिबद्धं तोरणशतप्रतिमण्डितं । तत्र चैकः प्रासादः कारितो ऽभूत् यत्र चतस्रः शयनकोट्यः प्रज्ञप्ता अभूत्कुमारस्य परिभोगार्थं । तत्र च मध्ये उद्यानं मापितमभूत्सर्वपुष्पवृक्षसर्वफलवृक्षसर्वरत्नवृक्षप्रतिस्फुटं संछादितमभूत् । तस्य खलु पुना राष्ट्रपालोद्यानस्य मध्ये पुष्करिणी[2] कारिताभूत् सप्तरत्नमयी चतूरत्नसोपाना । तद्यथा सुवर्णस्य रूप्यस्य वैडूर्यस्य स्फटिकस्य । अष्टोत्तरं च सिंहमुखशतं [13 b] येन गन्धोदकं प्रविशति तस्याः खलु पुनः पुष्करिण्या । अष्टशतमेव सिंहमुखानां येन पुनरेव तद्वारि निर्वहति । उत्पलपद्मकुमुदपुण्डरीकैः सततसमितं संकुसुमिता समन्ततश्च रत्नवृक्षपरिवारिता सर्वकालिकैः पुष्पफलवृक्षैः परिस्फुटा । तस्याः पुष्करिण्यास्तीरे अष्टशतं रत्नवृक्षाणां मापितमभूत् । सर्वस्मिन् रत्नवृक्षे षष्टि षष्टि रत्नसूत्राणि निबद्धानि । सर्वत्र च तालपङ्क्तिकोट्यो निबद्धास्तासां च वातेनेरितानां यानसंघट्टितानां शब्दो निश्चरति तद्यथापि नाम तूर्यशतसहस्रस्य संप्रवादितस्य । सा च पुष्करिण्युपरि रत्नजालसंछादिताभूत् । मा कुमारस्य रजो पांशुर्वा शरीरे निपतिष्यतीति ॥

तेन च समयेन तस्मिन्प्रासादे चतस्र आसनकोट्य प्रज्ञप्ता अभूवन्सप्तरत्नमय्य सर्वस्मिन्नासने पञ्च पञ्च दूष्य[1]शतानि प्रज्ञप्तान्यभूवन्। तत्र च मध्ये आसन प्रज्ञप्त सप्तरत्नमय समोच्छ्रयमुच्चत्वेनाशीतिदूष्यकोटिभि प्रज्ञप्त यत्र पुण्यरश्मी राजकुमारो निषत्स्यत इति। सर्वत्र चासनमूले अगरुगन्धघटिका धूप्यते। त्रिष्कृत्वो दिवसस्य त्रिष्कृत्वो रात्रे पुष्पसंस्तर क्रियते। सुवर्णछदनाच्छादित सुवर्णपद्मप्रलम्बित मुक्ताजालवितत मणिरत्नप्रभावभासितमशीतिसहस्रप्रलम्बितं । सर्वत्र च रत्नवृक्षे पताकाशतानि प्रलम्बितान्यभूवन्। सर्वत्र चोद्याने नवतिर्मणिरत्नशतसहस्राणि योजनप्रभाणि स्थापितान्यभूवंस्तेषा च प्रभया सर्वलोको ऽवभासितोऽभूत्। तस्मिन्पुना राष्ट्रपालोद्याने शुकसारिकक्रौञ्चकोकिलमयूरहंसचक्रवाककुनालकलविङ्कजीवंजीवका मनुष्यप्रलापिन पक्षिणोऽभूवन्। येषा निकूजितानि वदता नन्दने देवानामिव मदनीय शब्दो निश्चरति। कुमारस्य च परिभोगार्थं पञ्च रसशतप्रकाराणि भोजनानि सततसमितमभिसंस्कृतान्यभूवन्सर्वाकारसंपन्नानि ॥

तेन च पुन समयेन विंशत्यर्था समाना षोडशवर्षातिक्रान्ता कुमारिका सर्वनगरेभ्य समुदानीय तत्र च नगरे प्रवेशिता अभूवन्सर्वशिल्पस्थानकर्मस्थानविधिज्ञा सर्वलौकिकरत्युपकरणविधिज्ञानामशीतिकोट्य तस्मिन्नगरे प्रवेशिता अभूवन्। तस्य मातापितृभ्या कोटि कन्याना दत्ता ज्ञातिसंघेन कोटि नैगमजानपदै कोटि सर्वराजेन कोटि कन्याना दत्ता अभूवन्। ताश्च सर्वा अभिरूपा प्रासादिका दर्शनीया सर्वा षोडशवर्षप्रमाणा ज्ञात्या गीतकुशला वाद्य[14a]कुशला नृत्तकुशला हसितकुशला पुरुषोपसंक्रमणकुशला आर्जवा शिशवा मधुरा वृद्धा पूर्वाभिलापिन्य स्मितमुखाश्चोपचारकुशला सर्वकलासुविधिज्ञा नातिदीर्घा नातिह्रस्वा नातिकृशा नातिस्थूला नातिगौर्यो नातिश्यामा । यासामुत्पलगन्धो मुखात् प्रवाति चन्दनगन्धो गात्रेभ्य प्रवाति। व्यक्ता इव देवकन्यका ' एकान्तमनआपचारिण्य । तासा मध्यगत पुण्यरश्मी राजकुमार संगीतिसंप्रभाषितेन तत्र च संगीतिशब्दे वाद्यशब्दे चैव चित्तमुत्पादयति। महानमित्रसंघो वताय मम प्रादुर्भूत कुशलधर्मपरिमोषक ।

1) MS. दुष्य Id à la ligne suivante

हृत्तानपेक्षो भविष्यामि। स तस्मिन्समये स्याद्यथापि नाम वध्यः पुरुषो दृष्ट्वा न विस्मयचित्तमुत्पादयति। एवमेव पुण्यरश्मी राजकुमारः तां प्रमदां दृष्ट्वा न विस्मयति नापि तत्र नगरे न च सखीभिर्विस्मयति स्म। तैश्च दशभिर्वर्षैर्न जातु रूपनिमित्तमुद्गृहीतवान्न शब्दनिमित्तं न गन्धनिमित्तं न रसनिमित्तं न स्पर्शनिमित्तमुद्गृहीतवान्। अन्यत्रैवंरूपं चित्तं प्रवर्तयते स्म। कदा तावदेवंरूपादमित्रसंघमध्यान्मम मोक्षो भविष्यति। कदाहमप्रमादचर्यां चरिष्यामि येन मे मोक्षो भविष्यति। अथ खलु ताः कन्यकाः राज्ञोऽर्चिष्मत आरोचयन्ति स्म। न देव कुमारः क्रीडति न रमते न परिचारयति। अथ खलु राष्ट्रपाल राजार्चिष्मानशीतिभी राजसहस्रैः सार्धं येन पुण्यरश्मी राजकुमारस्तेनोपसंक्रम्याश्रुमुखः[1] प्रवेपमानेन कायेन शोचमानो धरणितले प्रपतितः। स उत्थाय धरणितलात्पुण्यरश्मिं राजकुमारं गाथाभिरध्यभाषत।

प्रेक्षस्व[2] पुत्रवररत्न मम प्रलापं शोकार्दितो निपतितोऽस्मि भुवि त्वदर्थे।
केनाप्रियं तव कृतं मम तद्ब्रवीहि श्रेष्ठं ददामि यदिहास्य क्षणेन दण्डम्॥

प्रेक्षस्व मेऽद्य नगरं सुरसंघरम्यं मनसा मयाभिरचितं यदिदं त्वदर्थे।
किमिहाङ्गनम्य विकलं मम तद्वदाशु शक्रस्य याद्य[3] विभवं तव दर्शयामि॥

शोकार्दितं कमललोचनचारुनेत्रं स्त्रीसंघमप्सरसमं विलपत्समीत।
एताभिरन्यैश्च रमस्व विनीय शोकं किं शल्यविद्ध इव ध्यायसि दीनवक्त्रः॥

एताः स्वरङ्गरुचिराः सुरतैर्विधिज्ञाः संगीतिताडसमये च विनिश्चयज्ञाः।
का[14 b]लस्तवाद्य सुरतस्य न शोचितस्य ज्ञानं महोरुहगिरासि किमद्य दीनः॥

उद्यानपुष्पफलपत्रविकीर्णशाखा उद्विद्धचित्रमिव चित्ररथं सुराणाम्।
संचितयस्व प्रवरं हि वयस्तवेदं कामो रते रम इहाद्य सुत प्रसीद॥

1) MS तेनोपसंक्रमानुपसंक्रम्य
2) Metre: Vasantatilakā 3) Ex conj. MS यद्ये.

तुल्या तवेयमपि पुष्करिणी सुराणां स्नानार्थमुत्पलसरोजवनाभिकीर्णा ।
पद्मानि मत्तवरषट्पदभूषितानि संचिन्त्य ता क इह नाभिरमेत पुत्र ॥

हंसा मयूर शुक सारिक कोकिलाश्च कोणाल जीव कलविङ्क मनोज्ञघोषाः ।
गन्धर्वमादन इवा हिमवत्समीपे श्रुत्वा नरः क इह नात्र रतिं लभेत ॥

एता विमान मणिचूडसमुक्तजाला वैडूर्यकाञ्चनचिता इव वैजयन्ते ।
रत्नासनानि च वराणि वरामृतानि चारुस्वरा कनककङ्कणतालपङ्क्तयः ॥

गम्भीरघोरवरतूर्यनिनादघुष्टा वीथीषु दानविसरास्तव चापि हेतोः ।
कन्याः सहस्रबहुगीतरुताः क्रियान्ते भूयन्ति नन्दनवनेऽप्सरसां यथैव ॥

कस्मात्त्रिविष्टपसमे भवने मनोज्ञे विचिन्त्यचित्त इह किं न रतिं करोषि ।
एते कुमार तव देवसमानगर्भाः क्रीडा सखाय सह पुत्र रमस्व चैभिः ।
माता पिता च तव संस्थित साश्रुकण्ठाः किं दुःख नास्ति करुणा च जने तवास्मिन् ॥

सोऽथाब्रवीद्गुणचितो भवदोषदर्शी निर्विण संस्कृतमनर्थिक कामभोगैः ।
संसारपञ्जरगतं जगदीक्ष्य चेदं मोक्षार्थिकः पितरमाह शृणुष्व देव ॥

देवाप्रियं मम कृतं न हि केनचिन्मे किं त्वस्ति मे ऽद्य न हि कामगुणेषु छन्दः ।
सर्वे प्रिया रिपुसमा हि निरानुरक्ता ये लोकदुर्गतिप्रपात प्रपातयन्ति ॥

एता स्त्रियो ह्यबुधबालजनाभिरामा मारस्य पाशगुणबद्ध महाप्रपाताः ।
नित्यं तवा विगर्हित ह्यार्यजनेन चैताः सेवामि किं नरकदुर्गतिशोकमूलाः ॥

एता स्त्रियो हि छविमात्रकल्प्यरम्याः स्नाय्वस्थिपत्तमशुचीभि निरर्थको ऽहं ।
प्रस्राविणी रुधिरमूत्रशकृन्मलानां व्यक्तं श्मशानसदृशीषु कथं रमेयम् ॥

गीतं न श्रोष्यमपि वाद्यरुतं न भाव्यं स्वप्नाय माभिरतयो ऽबुधमोहनाय ।
सकल्पनालस गता अनुधा तु नाम कि त्वीशदास इव बालजनो भविष्ये ॥

सर्वे इमे द्रुमलता शिशिरे प्रवृत्ते कान्तारवृक्षसदृशा हि भवन्त्यरम्या ।
सर्वप्रियो विधमनी(1) हि अनित्यतेय मोहात्प्रमादमुपयामि यन्नो तु जीवे ॥

चित्त समुद्र इव सर्पयितु न शक्यम् तृष्णाप्रवृत्तिनिरत पुनरेव काङ्क्ष ।
अन्योन्यघाति जगदेन्य हि कामहेतो मेरुर्यथैव पवनैर्(2)हिमप्रकम्प्य ॥

न त्वं पिता न सहृजा मम नापि भार्या त्राता न बान्धव[15a]जना नृपते ह्यपायात् ।
सर्वे वय तृणगता इव बिन्दुलेखा मा तात चित्तवशगा भवतां प्रमत्ता ॥

धिग्जीवितेन मनुजेश्वर यत्र नित्य धिग्जीवितस्य गमन गिरिस्रोतशीघ्र ।
धिक्संस्कृत रूपमिद तडिदभ्रलोलं धिक्पण्डितस्य त्रिभवे(3) नृप कामराग ॥

सचोदितोऽस्मि विबुधैर्भव अप्रमत्तो नो बोधिसत्त्व भवते विषयाभिलाष ।
बुद्धो भवेयमिह लोकहितानुकम्पी नास्ति प्रमादचरितस्य नरेन्द्र बोधि ॥

कामातुरो भवति यो नृप चित्तदास स हि पुण्यनाशनिरतो विनिवृत्तस्वर्ग ।
ह्रीमासमिद्धमपि नाभिचरेत जातु पत्नीव पन्नगगनः कथमाश्वसेत ॥

धातूश्च सर्पसदृशा वधकाश्च स्कन्धा चित्त च साश्रवमनर्थक शून्यग्राम ।
विषस्तम्भगुप्तित इवेह नरेन्द्र काय ओघे ज्वलिष्यति कथ नु रतिर्ममात्र ॥

संप्रेक्षसे जगदिद कुगतिप्रपन्न व्यक्त पद गगनतुल्यमपि ज्वलन्तम् ।
तेषां प्रमोक्षणनिमित्तमिहाद्य राजन् शिवधर्मनाव समुदानयितास्मि शीघ्रम् ॥

1) Ex conj. MS विविधमणीभि
2) MS इह अप्रकम्प्य..
3) MS. तृभवे

सुतान्विबोधयितुमातुर जीवितार्थं शल्यं निमूलयितुमुत्पथगान् विनेतुम् ।
प्रोद्धुष्य बन्धनविमोक्ष महासहस्रे संतर्पयिष्यि दरिद्र सुभाषितेन ॥

सोऽहं दुर्गतिप्रपातृपि चोद्धरिष्ये अन्धे चक्षुरपि तृष्णालताविशोषी ।
प्रज्ञार्चिहृतमतिमुक्तिकृतप्रदीपो द्रक्ष्यन्ति येन त्रिभवं नटरङ्गकल्पम् ॥

मेघं कृपाकरुणधारिमिवाभ्रकूटं सत्वार्थगर्जित विपश्यनविद्युमाली ।
बोध्यङ्गधारसुखशीतलवृष्टिजालैः शीतीकरोमि च जगच्चिरकालतप्तम् ॥

एतत्स्मरन्नहमिह नितिशोकविद्धो नास्तीह मे प्रणिधि संस्कृतसर्वकामैः ।
बोध्यर्थिको हि विचरामिह सर्वलोकः एकाकिको न हि भवाभिरतो ममेच्छा ॥

ज्ञानन्वसेत्क इह पार्थिव शत्रुमध्ये को बुद्धिमान्भयमार्गपथं व्रजेत् ।
को वा सचक्षुरिह तात पतेत्प्रपाते को बोधिमार्गमधिगम्य भवेत्प्रमत्तः ॥

अनुस्रोत सर्वजगती प्रतिस्रोतो सोऽहं वाचा न शक्यमिह पार्थिव बोधि प्राप्तुम् ।
मेरुप्रपातमपि सागरमुत्क्षिपेयं न त्वेव मे मन इहाभिरमेत कामैः ॥

गच्छातु पार्थिव वरस्वजनेन सार्धं सर्वा हि राष्ट्ररतिमुत्सृज सर्वलोके ।
आदाय गच्छतु यथाभिमतं हि यस्य गृह्या प्रमाद मम तात न राज्यकोट्यः ॥

शक्या न नारिगणमध्यगतेन बोधिः प्राप्तु शिवं पदमनुत्तरयोगक्षेमम् ।
गच्छाम्यहं गिरिवनान्तरमाश्रयामि प्राप्ता ह्यरण्यनिरतेन जिनेन बोधिः ॥

अथ खलु राष्ट्रपाल पुण्यरश्मी राजकुमारः प्रासादत[15b]लगत एव ताभिः प्रमदाभिः सार्धं च क्रमनुद्विग्नमनाः संत्रिभिरीर्यापथैर्विहरति । कतमैस्त्रिभिः । स्थानेन चङ्क्रमेण निषद्यया स्त्यानमिद्धपरिवर्जितः । उपरिप्रासादतलगतोऽष्टम्यां भूमौ स्थितः सोऽर्धरात्रकालसमये अश्रौषीत् । अन्तरीक्षाच्छुद्धावासकायिका देवता बुद्धस्य वर्णं भाषमाणा गच्छन्ति वि-

स्तरेण धर्मस्य संघस्य वर्णं भाषमाणा गच्छन्ति। श्रुत्वा च राष्ट्रपाल पुण्यरश्मी राजकुमारः संहृष्टरोमकूपजातः। अश्रु निपातयति। ससंवेगजातो ऽञ्जलिं कृत्वा तां देवतां गाथाभिरध्यभाषत ॥

मयि करुणा जनित्वा देवता दुःखिते ऽस्मिन् यदि न कुरुत मन्युं किंचिदेवाभिपृच्छे।
कस्य गुणा वदन्तो गच्छेताज्ञान्तरीते सुखितमिह मनो मे वाक्यमेतं निशाम्य ॥

अथ खलु राष्ट्रपाल ता देवता पुण्यरश्मिराजकुमारं गाथाभिरध्यभाषत ॥

श्रवणमुपगतस्ते किं न बुद्धः कुमार शरणमशरणानां नाम सिद्धार्थबुद्धिः।
परचरि कुशलोऽसौ पुण्यप्रज्ञागुणाढ्यो दशनियुतसहस्राध्यायिनो तस्य संघः ॥

पुण्यरश्मिराह।

[1] अहमपि जिन दृद्ये कीदृशं तस्य रूपं वदत अपि च सर्वे कीदृशो चास्य वर्णः।
अहमपि परिपृच्छे कीदृशी बोधिचर्या भवति यथ चरन्वै सर्वसत्त्वैकनाथः ॥

अथ खलु ता देवता पुण्यरश्मिं राजकुमारं गाथाभिरध्यभाषत ॥

स्निग्धरुचिरकेशा दक्षिणावर्तजाता गिरितलमिव[2] हैम शोभते चास्य चोष्णिषा।
गगन इव च शून्यो[3] भासते चास्य ऊर्णा स्फटिकमणिविशुद्धा दक्षिणा नाभि जाता ॥

भ्रमरगणविशुद्धा नेत्र नीलोत्पलाभा सिंहहनु नरेन्द्रो बिम्बओष्ठः स्वयंभूः।
मुञ्चति च सहस्रं वै रश्मिकोटीरनन्तान् स्फुरति च त्रिसहस्रमान्दुर्गतीः शोधयन्त ॥

समसहितसुवृत्ता दन्त चित्रसुशुक्ला हिमरजतविशुद्धा विंशति द्वे गुणास्य।
जिनवरप्रवरस्य तस्य दंष्ट्रावतन्तः स्वनगुणप्रनिह्रादा तस्य जिह्वा प्रभूता ॥

1) Mètre: Mālinī.

2) MS ह्रह. Id. au pâda suivant.

3) MS शुन्यो

गिरिवरसहितार्था तस्य प्रह्लादनीया सखिल अकुटिला च ब्रह्मघोषा सुयुक्ता ।
तूर्यशतसहस्रैर्वाग्जिनस्यार्द्धतुल्या विनतिशमनकारी सा तोषणी अर्थिकानाम् ॥

अविकलगुणचित्रा बोधिअङ्गानुकूला हारशतसहस्रा गुह्मिता[1] धर्मजाला ।
तूर्यरतिविघुष्टा देवतागीतरम्या अमररुचिस्वरा वै ह्लादनी वाग्जिनस्य ।

किंनरकलविङ्काकोकिलाचक्रवाकाबर्हिणकलहंसाघोष कोनालकानां ।
असु[16a]रुतनिर्घोषा किंनराणां स्वराङ्गा अखलितमनवद्या सर्वअर्थानुबोधा ॥

चित्रस्फटिकसदृशा पण्डितानां मनापा चोदनी विनयनीया बोधनी प्रेमणीया ।
पारचरिमनुकूला तोषणी पृच्छमाना इनगुण वचना चैतस्य धर्मेश्वरस्य ॥

कम्बुरुचिर ग्रीवा शान्तसंवृत्त स्कन्धः दीर्घपरिघ बाहू तस्य सप्तोत्सदाङ्ग ।
कर रुचिरसुवृत्ता दीर्घवृत्ताङ्गुलीकास् तपितकनकवर्णा तस्य गात्रं जिनस्य ॥

रोम परिणताग्र दक्षिणो चैकजाता नाभि निखिल दुर्गा गुह्यकोशो हयो वा ।
ऊरु गजकरो वा एणजङ्घः स्वयंभूः करतल सुविचित्रा स्वस्तिकाश्चक्रचित्राः ॥

गजपतिगतिगामी सिंहविक्रान्तगामी वृषभललितगामी इन्द्रयष्टिप्रवृद्धः ।
गगनकुसुमवृष्टिः पुष्पछत्रा भवन्ति व्रजतिमनुव्रजन्ति धर्म एते ऽद्भुतस्य ॥

लाभ अथ अलाभे सौख्य दुःखे जिनस्य अपवासि यश एवं निन्द शंसासु चैवं ।
जलरुहमिव तोयैः सर्वतो नोपलिप्तः एवमिह नृसिंहो नास्ति भवः समो ऽस्य ॥

अथ खलु राष्ट्रपाल पुण्यरश्मी राजकुमारः बुद्धस्य वर्णं श्रुत्वा विस्तरेण धर्मस्य संघस्य वर्णं श्रुत्वा तुष्ट उदग्र आत्तमनाः प्रमुदितः प्रीतिसौमनस्यजातो ऽभूत्। अथ खलु राष्ट्रपाल पुण्यरश्मे राजकुमारस्यैतदभवत्। यादृशः संबुद्धो भगवान् यादृशो चास्य संघस्तंगन्

1) *guhmita* paraît être une prâcritisation de *gumphita*

यादृशश्च तेन धर्मः साक्षात्कृतः । यादृशी चास्य शिष्यसंपत् । यथा विषयसमवधानश्च संसारः । यथाकृतज्ञश्च संसारः । यथाकृतज्ञाश्च बालपृथग्जनाः । यथा विषमाश्च सत्कायदृष्टिः । यथा बद्धादीनवश्च गृहावासो यथा बहुदोषाश्च कामाः । यथा गर्हितश्च पण्डितैः प्रमादः । यथा संमोहं चाविद्यान्धकारं यथा दुःप्रतिवेधाश्च संस्काराः । यथा दुर्दमं चित्तं यथा गम्भीरं नामरूपं यथानास्वादं षडायतनं यथा दुःखविपाकश्चापरिज्ञातः स्पर्शः । यथा बह्वादीनवा वेदनाः । यथा गाढबन्धना तृष्णा यथा दुःप्रतिनिःसरणं चोपादानं यथानार्या भवतृष्णा भवे सति यथा दुःखसमुच्छ्रेया च जातिः । यथा विकारकारी च जरा यथा विलोपकारकश्च व्याधिः । यथा निरनुरक्तं च मरणं यथाल्पास्वादा च प्रवृत्तिः । यथा बह्वादीनवा च भवाभिनिर्वृत्तिः । यथा रमणीयं च तथागतशासनं । नेदं शक्यं कामदासेन क्लेशसंमोहितेन चित्तखिलेन प्रमादाभिरतेन बालमध्यगतेनायोनिशश्चित्तेन संसाररक्तचित्तेन दुर्जनमध्यगतेन न शक्यं सुगतिपन्थान[16b]मपि विशोधयितुं कुतः पुनरनुत्तरां सम्यक्संबोधिमभिसंबोद्धुम् । तस्यैतदभूत् । यन्नूनमित एव प्रासादात्प्राङ्मुखः प्रपतेयं मा मे द्वारेण निष्क्रमतो ज्ञातिसंघोऽन्तरायं कुर्यात् ॥

अथ खलु राष्ट्रपाल पुण्यरश्मी राजकुमारो येन भगवान्सिद्धार्थबुद्धिस्तथागतस्तन्मुखस्ततः प्रासादादात्मानमुत्सृष्टवानेवं च भाषते स्म । सचेत्स तथागतः सर्वं जानाति सर्वं पश्यति समन्वाहरतु मां तथागतः । अथ खलु राष्ट्रपाल सिद्धार्थबुद्धिस्तथागतोऽर्हन् सम्यक्संबुद्धो दक्षिणपाणिं प्रसार्य प्रभां प्रामुञ्चत् । यया पुण्यरश्मी राजकुमारः स्पृष्टो ऽभूत् । तस्याश्च प्रभायाः शतसहस्रपत्रं पद्मं शकटचक्रप्रमाणमात्रं प्रादुर्भूतं । तस्माच्च पद्मात् रश्मिशतसहस्राणि निश्चरन्ति स्म । महांश्चावभासो ऽभूत् । येनावभासेन पुण्यरश्मी राजकुमारः स्फुटो ऽभूत् । अथ खलु राष्ट्रपाल पुण्यरश्मी राजकुमारस्तस्मिन्पद्मे स्थितो येन स भगवान्सिद्धार्थबुद्धिस्तथागतोऽर्हन् सम्यक्संबुद्धस्तेनाञ्जलिं प्रणम्य नमो बुद्धायेत्युदानमुदानयति स्म ॥

अथ खलु राष्ट्रपाल तेन सिद्धार्थबुद्धिना तथागतेन सा प्रभा प्रतिसंहृता । स प

कुमारस्तस्य भगवतः पादमूले छिन्नपादप(1) इव प्रपतित्वा शतसहस्रकृत्वस्तथागतं वन्दते स्म ॥

अथ खलु राष्ट्रपालः पुण्यरश्मी राजकुमारस्तं भगवन्तं गाथाभिरध्यभाषत ।

यथा[2] चिराद्दृष्ट हि वैद्यराजः कृच्छ्राद्विमुक्तो ऽद्य चिरातुरेण ।
याचन मे नाथ कथं स्थितोऽहं लाभो भवेय सुगतस्य शासने ॥

श्रुतो मया नायक अप्रमादो निशाम्य रात्रौ दिवि देवताभ्य ।
श्रुत्वा च सार्थं हि आगतोऽहं कथं नराणां भवते प्रमाद ॥

प्रणष्टमार्गस्य भवाद्य देशको ज्ञात्यन्धभूतस्य भवाद्य चक्षु ।
महाप्रपातादिह मा समुद्धर भद्राकारा कारुणिका चिकित्सका[3] ॥

दरिद्रभूतस्य कुरुष्व सम्पद् बद्धस्य मोक्षं कुरु मेऽद्य नाथ ।
भवत्रयेभ्यो विमतिं च छिन्द चर्यां च मे व्याकुरु बोधिमार्गे ॥

त्राणं च सर्वेष उक्तो मे द्वीप कुरुष्वापि ममान्धकारे ।
व्रणाकृत मा हि कुरुष्व निर्व्रणं शल्यं च मे उद्धर वैद्यराज ॥

विमोच्य मां दुर्गतित्रयाद्धि भवोपलम्भग्रहणान्निवर्त ।
संतार मां शोकनदी(17a)यथाहम् अष्टाङ्गमार्गेण महारथेन ॥

पराक्रमामि तव धर्मि ज्ञानिन वह्नेस्तराप युगान्त भवत्यपि ।
पुण्यस्य सिध्यत्यचिराद्विपाक लब्धक्षणो मेऽद्य वदेय निश्चयम् ॥

---

1) MS छिन्नप्रपात La correction est garantie par le chinois.

2) Mètre Upajati.

3) MS. चिकित्सका

एतद्धि मे व्याकुरु लोकनाथ स्याद्बोधिसत्त्वो हि यथाप्रमत्तः ।
यथा चरन्नुत्तमबोधिचारिकां प्रमोचयेयं भवबन्धनाज्जगत् ॥

अथ खलु राष्ट्रपाल सिद्धार्थबुद्धिस्तथागतः पुण्यरश्मे राजकुमारस्याध्याशयं विदित्वा विस्तरेण बोधिचर्यां संप्रकाशयति । यं श्रुत्वा पुण्यरश्मिना राजकुमारेण विमोता नाम धारणी प्रतिलब्धा पञ्चाभिज्ञाः प्रतिलब्धाः । स वैहायसे स्थित्वा पुष्पाण्यभिनिर्माय तं तथागतमभ्यवकिरति स्माभिप्रकिरति स्म ॥

अथ खलु राष्ट्रपाल पुण्यरश्मी राजकुमारस्तस्मादन्तरीक्षादवतीर्य तं भगवन्तं सिद्धार्थबुद्धिं तथागतं गाथाभिरभ्यष्टावीत् ॥

वन्दामि[1] ते कनकवर्णनिभा वरलक्षणा विमलचन्द्रमुखा ।
वन्दामि ते असमज्ञानधरा सदृशो न तेऽस्ति त्रिभवे विरजः ॥

मृदु चारु स्निग्ध शुभ केश जिना गिरिराजतुल्य तव चोष्णिरिह ।
नोष्णीषमीक्षितु तवास्ति समो विद्यते भुवि दिवे ऽपि नरोर्ण मुने ॥

कुन्देन्दुशङ्खहिमशुभ्रनिभा नीलोत्पलाभशुभनेत्रवरा ।
कृपयेक्षसे जगदिदं हि यथा वन्दामि ते विमलनेत्र जिना ॥

जिह्वा प्रभूत तनु ताम्रनिभा वदनं च छादयसि येन स्वकं ।
धर्मं वदन्विनयसे च जगत् वन्दामि ते मधुरस्निग्धगिरम् ॥

दशना शुभाः सदृश यमनिभाः त्रिंशद्दशाप्यविरलाः सहिताः ।
कुर्वन्स्मितं विनयसे च जगत् वन्दामि ते मधुरसत्यवचा ॥

---

1) Mètre Pramitākṣarā, avec substitution habituelle d'une longue aux deux brèves initiales.

रागादिभिश्च बहुरोगशतैः संतापितं सततमीक्ष्य जगद् ।
वैद्योत्तमो विचरसे अप्रतिमः परिमोचय सुगत सत्त्वशतान् ॥

जातीजरामरणशोकहतं प्रियविप्रयोगपरिदेवशतैः[1] ।
सततातुरं च जगदीक्ष्य मुने परिमोचयन्विचरसे कृपया ॥

रथचक्रवद्भ्रमति सर्वजगत् तिर्यक्षु प्रेतनिरये सुगतौ ।
मूढा ह्यदेशिक अनाथगताः तेषां प्रदर्शयसि मार्गम् ॥

ये ते बभूव पुरिमाश्च जिना धर्मेश्वरा जगति चार्थकराः ।
अपेव तैः प्रवचिनो ऽर्थयशो यं देशयस्यपि विभो अप्रतिमः ॥

स्निग्धं स्वाकर्षय[2] मनोज्ञ वरं ब्रह्माधिकं परमप्रीतिकरम् ।
गन्धर्वकिंनरवराप्सरसामभिभूय तां गिरमुदाहरसे ॥

सत्यार्जवव्रतपुण्यनयैः परिशोधितां गिरमनन्तगुणाम् ।
श्रुत्वा हि या नियुतसत्त्वशता यानत्रयेण जिन यान्ति शमम् ॥

तव कृपया सुखमनेकविधं दिव्यं लभन्ति मनुजेषु तथा ।
प्राप्तो महायन महाभिज्ञो भवने जगद्धितकरो नृपतिः ॥

बलचक्र वर्तयसि च क्षीणरागैः जगदावृणोति दशभिः कुशलैः ।
रत्नानि सप्त लभते सुगुणा[3] त्वयि संप्रसादजनको ऽप्रतिमः[4] ॥

ब्रह्मापि शक्र यदि लोकपतिः भवते च संतुषितदेवपतिः ।
परिनिर्मितो ऽपि च सुखामरपतिः त्वत्कृपया भवति यादि जिनः ॥

---

1) MS. परिदेव.
2) ākarṣaya est pour ākarṣayan
3) suçubhaṃ est pour suçubhāṃ = suçubhāni
4) MS. प्रतिमः

सर्वज्ञं विगतज्वरं नरवीरं यस्य नास्ति समः कुतो ऽधिकस्त्रिभवे ऽस्मिन्।
स्तुत्वा पुण्यमुपार्जितं मया यदिह तेन शान्तां बोधिवरामनुत्तरां स्पृशतु लोकः॥

अथ खलु राष्ट्रपाल स तथागतः सिद्धार्थबुद्धिः राज्ञो ऽर्चिष्मतो ऽध्याशयं विदित्वा तथा धर्मं देशयामास यथा सर्वे अवैवर्तिका अभूवन्ननुत्तरायां सम्यक्संबोधौ॥

अथ खलु राष्ट्रपाल पुण्यरश्मी राजकुमारस्तं भगवन्तं सिद्धार्थबुद्धिं तथागतमेतदवोचत्। अधिवासयतु भगवानस्माकं नगरे श्वो भक्तेन। अधिवासयति च भगवान् पुण्यरश्मे राजकुमारस्य तूष्णीभावेनानुकम्पामुपादाय॥

अथ खलु पुण्यरश्मी राजकुमारस्तौ मातापितरौ तांश्च प्रमदा आमन्त्रयति स्म। अनुमोदयन्तु भवन्तः सर्वे सहिताः सर्वे समग्राः। यथालंकृतं रतिप्रधानं नगरं तथागतस्य निर्गतपाम्यनपेतः। तैरेकस्वरेणानुमो[19a]दितम्॥

अथ खलु राष्ट्रपाल पुण्यरश्मी राजकुमारो यथालंकृतं रतिप्रधानं नगरं तथागताय निर्यातयति स्मानपेतः। पञ्चरसशतव्यूहेन च भोजनेन तं तथागतं प्रतिपादयति स्म सार्धं भिक्षुसंघेन सर्वेषां तेषां भिक्षूणां सप्तरत्नचितान् विहारान्कारयामास मणिचंक्रमान्प्रज्ञप्तानुपरि च रत्नजालवितानविततान् यामदत्तियेन पुष्पवृन्तमुपरि निक्षिप्तान्पुण्डरीकपु(1)ष्करिण्युपशोभितान्युभयतो मुक्तानिर्मलदू(2)ष्यशयनसहस्रप्रज्ञप्तानि शय्यासनानि। एकैकस्य च भिक्षोरभिनवञ्च चीवरो दीयते स्मैकैकः। अन्योन्यानि चीवराण्यनुप्रदीयन्ते दिवसे दिवसे। स त्रिभिर्वर्षकोटिभिः स्त्यानमिद्धं नावक्रामितवानात्मप्रेम कृतवान्बुद्धपूजां प्रति नान्यमनसिकारः। एतस्मिन्नन्तरे न कामवितर्कं वितर्कितवान्न व्यापादवितर्कं न विहिंसावितर्कं न राज्यतृष्णां। सर्वत्रानपेक्षो ऽभूत्काये जीविते च प्रागेवान्यतरस्मिन्बाह्यवस्तुनि। एतस्मिन्नन्तरे यद्भगवता भाषितं तत्सर्वमवधारितं न च छिद्रमपि स तथागतः पृष्टः। एतस्मिन्नन्तरे न स्नातो न सर्पिस्तैलेन वा गात्रं मर्दितं न पादधावनं कृतं न ज्ञातसंशोत्पादिता न जानु

1) MS. पुन्किरिण्यु°.
2) MS. दुष्य

नियमो ऽन्यत्र भक्तपरिभोगार्थमुच्चारप्रस्रावणार्थं च । यस्मिंश्च समये स तथागतः परिनिर्वृतस्तस्मिन्समये लोहितचन्दनस्य चिता कारिता यत्र स तथागतो ध्मापितस्तस्मिन्नेव च पृथिवीप्रदेशे वर्षशतसहस्रं धातूनां पूजां कृतवान्सर्वे जम्बुद्वीपे सर्वपुष्पैः सर्वमाल्यैः सर्वगन्धैः सर्ववाद्यैर्यावत्सर्वपूजासत्कारान्कृत्वा पश्चाच्चतुर्नवतिः स्तूपकोट्यः प्रतिष्ठापितवान् । ते च स्तूपाः सप्तरत्नमया रत्नजालसंछन्ना मुक्ताजालवितानविततः । सप्तानां रत्नानां पञ्च पञ्च छत्रशतान्येकैकस्मिन्स्तूपे आरोपितवान्सर्वत्र च स्तूपे तूर्यशतसहस्राणि निश्चारितवान्समन्ततश्च जम्बूद्वीपे पञ्चपुष्पावकीर्णवान् । एकैकत्र च स्तूपे दीपस्थालिकाशतसहस्राण्यादीपितवान् । एकैकस्यां च दीपस्थाल्यां वर्तिसहस्रं दीप्यते सर्वगन्धतैलस्य सर्वगन्धनाड्यविलेपनैश्च पूजामकरोत् । अनेनोपायेन वर्षकोटिं पूजां कृत्वा [19b] ततः प्रव्रजितः । स प्रव्रजित्वा त्रैचीवरिको ऽभवत् । नित्यं पिण्डपातिको नैषद्यिकः । न जातु पार्श्वं दत्तवान्न स्थानमिद्धमवक्रामितवान् । तेन निरानिर्यचित्तेन चतस्रो वर्षकोट्यो धर्मदानं दत्तं न चानेनात्मनः साधुकारो ऽपि परस्मात्सकाशात्प्रतिकाङ्क्षितः । पुनः पुनर्लाभसत्कारो नापि ज्ञातो ऽभूद्ब्रह्मचर्येण धर्मदेशनया च । तस्य देवताः परिचर्यां कुर्वन्ति स्म । तस्य चानुशिक्षित्वा सर्वजनपदो ऽन्तःपुरं सर्वनादमूलं सर्वसत्त्वाश्च प्रव्रजिताः ॥

यत्र खलु राष्ट्रपाल शुद्धावासकायिकानां देवपुत्राणामेतदभवत् । पुण्यरश्मेरनुशिक्षमाणः सर्वराज्यजनपदः प्रव्रजितः । अस्माभिस्तस्योपस्थानपरिचर्या कर्तव्या । त्रयाणां स्थानानुपस्थानं कृतं भविष्यति । तस्य पुनस्तथागतस्य परिनिर्वृतस्य खलु षष्टिवर्षकोट्यः सद्धर्मस्तस्थौ सर्वश्च पुण्यरश्मिना भिक्षुणा बुद्धस्तूपस्य चैत्येषु पूजा कृताभूत् ॥

स्यात्खलु पुनस्ते राष्ट्रपालैवं काङ्क्षा वा विमतिर्वा विचिकित्सा वान्यः स तेन कालेन तेन समयेनार्चिष्मान्नाम राजाभूत् । न खलु पुनस्त्वयैवं द्रष्टव्यं । तत्कस्य हेतोः । अमिताभः स तथागतस्तेन कालेन तेन समयेनार्चिष्मान्नाम राजाभूत् ।

स्यात्खलु पुनस्ते राष्ट्रपालान्यः स तेन कालेन तेन समयेन पुण्यरश्मिर्नाम राजकुमारो ऽभूत् । न खलु पुनस्त्वयैवं द्रष्टव्यं । तत्कस्य हेतोः । अहं स तेन कालेन तेन सम

सर्वज्ञं विगतज्वरं नरवीरं यस्य नास्ति समः कुतो ऽधिकस्त्रिभवे ऽस्मिन्।
स्तुत्वा पुण्यमुपार्जितं मया यदिह तेन शान्तां बोधिवरामनुत्तरां स्पृशतु लोकः ॥

अथ खलु राष्ट्रपाल स तथागतः सिद्धार्थबुद्धिः राज्ञो ऽर्चिष्मतो ऽध्याशयं विदित्वा तथा धर्मं देशयामास यथा सर्वे अवैवर्तिका अभूवन्ननुत्तरायां सम्यक्संबोधौ ॥

अथ खलु राष्ट्रपाल पुण्यरश्मी राजकुमारस्तं भगवन्तं सिद्धार्थबुद्धिं तथागतमेतदवोचत्। अधिवासयतु भगवानस्माकं नगरे श्वो भक्तेन। अधिवासयति च भगवान् पुण्यरश्मे राजकुमारस्य तूष्णीभावेनानुकम्पामुपादाय ॥

अथ खलु पुण्यरश्मी राजकुमारस्तौ मातापितरौ तांश्च प्रमदा आमन्त्रयति स्म। अनुमोदयन्तु भवन्तः सर्वे सहिताः सर्वे समग्राः। यथालंकृतं रतिप्रधानं नगरं तथागतस्य निर्यातयाम्यनपेक्षः। तैरेकस्वरेणानुमो[19a]दितम् ॥

अथ खलु राष्ट्रपाल पुण्यरश्मी राजकुमारो यथालंकृतं रतिप्रधानं नगरं तथागताय निर्यातयति स्मानपेक्षः। पञ्चरसशतव्यूहेन च भोजनेन तं तथागतं प्रतिपादयति स्म सार्धं भिक्षुसंघेन सर्वेषां तेषां भिक्षूणां सप्तरत्नचितान् विहारान्कारयामास मणिचंक्रमान्प्रज्ञप्तानुपरि च रत्नजालवितानविततान् चामरदलिणेन पुष्पवृक्षसुपरिनिष्ठितान्पुण्डरीकपु(1)ष्करिण्युपशोभितान्युभयतो मुखनिर्मलदू(2)ष्यवितानसहस्रप्रज्ञप्तानि शय्यासनानि। एकैकस्य च भिक्षोर्भिन्नन्य चीवरो दीयते स्मैकैकः। अन्योन्यानि चीवराण्यनुप्रदीयन्ते दिवसे दिवसे। स त्रिभिर्वर्षकोटिभिः स्त्यानमिद्धं नावक्रामितवानात्मप्रेम कृतवान्बुद्धपूजां प्रति नान्यमनसिकारः। एतस्मिन्नन्तरे न कामवितर्कं वितर्कितवान्न व्यापादवितर्कं न विहिंसावितर्कं न राज्यतृष्णां। सर्वथानपेक्षो ऽभूत्काये जीविते च प्रागेवान्यतरस्मिन्बाह्यवस्तुनि। एतस्मिन्नन्तरे यद्भगवता भाषितं तत्सर्वमवधारितं न च द्विरपि स तथागतः पृष्टः। एतस्मिन्नन्तरे न स्नातो न सर्पिस्तैलेन वा गात्रं म्रक्षितं न पादधावनं कृतं न ज्ञातसंज्ञोत्पादिता न जातु

1) MS. पुष्किरिण्यु°
2) MS. दुष्य

येन पुण्यरश्मिर्नाम राजकुमारो ऽभूत्। यापि सा नगरदेवता अक्षोभ्यस्तथागतो ऽभूत्। तस्मात्तर्हि राष्ट्रपाल बोधिसत्त्वेन महासत्त्वेनानुत्तरां सम्यक्संबोधिमभिसंबोद्धुकामेन तस्य पुण्यरश्मिराजकुमारस्यानुशिक्षितव्यमध्याशयप्रतिपत्त्या प्रियाप्रियपरित्यागितया अप्रमादचर्यया। एवं दुःखाभिसंस्कारप्रतिलब्धा मे ऽनुत्तरा सम्यक्संबोधिरिति। तत्ते ऽनभियुक्ता लाभसत्कारश्लोकगुरुका ज्ञात्यध्यवसिता मानहता लाभहतास्तपस्विनो विहन्यन्ते लाभहेतोः शासनाद्दूरीभवन्ति निरर्थकं प्रव्रजिताः श्रमणदूषका बोधिसत्त्व[20a]खटुकाः कायवाक्चित्तवङ्काः नैमित्तिकाः वितथप्रतिज्ञाः स्वप्रतिज्ञातश्च्युताः चीवरपिण्डपातशय्यासनग्लानप्रत्ययभैषज्यपरिष्कारनिमित्तमध्यवसिताः। अह्रीका अनपत्रपा अचारित्रा असद्धर्मप्रसृता गोचरविरहिता बुद्धगोचराद्दूरीभूता बुद्धज्ञानविरहिताः मैत्रचित्तविरहिताः बोधिचित्तविरहिताः। तस्मात्तर्हि राष्ट्रपाल इममेवंरूपं धर्मं श्रुत्वा बोद्धव्यं। पापमित्राण्ययुक्तानि न सेवितव्यानि लाभार्थिकानाम्।

अथ खलु भगवांस्तस्यां वेलायामिमा गाथा अभाषत।

(1) अप्रमेये दशबलचलिते लाभे ज्ञातौ परिगतहृदया।
हित्वा बोधिं गुणशतनिचितां लाभार्थं ते परकुलनिरताः॥

श्राद्धा दुष्टा ह्रीधृतिरहिता तेनार्थं ते नमुचिवशगताः।
क्लेशाधीना भवगतिप्रपाता भाषन्त्येवं वयमपि गुणिनः॥

कायो ऽरण्ये स्मृतिरपि नगरे लाभार्थं ते चरितविकल्पे।
दूरे मोक्षो नभ इव धरणी दूरे शाक्र भुजगवदेतान्॥

बुद्धो धर्मो न च प्रियवदता तद्वत्संघो गुणशतभरितः।
हित्वा स्वर्गं कुगतिप्रपाता अष्टविधानैर्भवशतविहताः॥

1) Mètre: Bhramaravilasita.

श्रुत्वेनां मम चारिका समुपदिष्टां भूताध्याशयतो ऽत्र युज्यथा प्रतिपत्त्या।
दुःप्राप्यं बहुकल्पकोटिभिः क्षणप्राप्ता तस्मादत्र यथोक्तधर्मतामभियुज्येन्॥

यो ह्यीच्छेद्वरबोधि बुध्यितुं वरयाने स्पर्शास्तेनैं मदीयतेः गुणास्तस्य।
संचिन्त्य यथाभूत योनिशः स्थातव्यमेवं बोधि असंग रिध्यते सुगतानाम्॥

आर्यवंश निषेवते गुणप्रेक्षी ज्ञानं तत्र उत्पादयेच्छु इवात्र।
मा एवं प्रविशत्य शासने गुणमण्डे सर्वास्विनगतीषु पचसू यथ बालाः॥

शैलारण्यगुहानिवासिनो भवतेह तत्रस्थाश्च म आत्म मन्यथा परपंशी।
आत्मानं परिभाषथा सततनित्यमनुस्मरन्तो बुद्धकोटि विरागिता पुरिमा ये॥

कार्ये जीवित तृष्णा उत्सृज अनपेक्षा धर्म युध्यन तीव्र गौरवं जनयित्वा।
प्रतिपत्तिश्च मयापि भाषिता इह सूत्रे यथा बोधि न तेषु दुर्लभा इह स्थित्वा॥

ये युक्ताश्च इहापि दर्शिता जिनयाने श्रुत्वा युक्त सुदुर्लभा भेचितारः।
तस्माद्धि जनयेत शासने अधिमुक्तिं मा पश्चादनुताप भेष्यथा विचरमाणाः॥

यश्च पुना रा[20b]ष्ट्रपाल बोधिसत्त्वः पञ्चपारमितासु चरेत् यश्चेह धर्मपर्यायप्रतिपत्त्या समादपेत् अहमत्र शिक्षिष्ये ऽहमत्र संचरे स्थास्यामि। एष पुण्यस्कन्धो ऽस्य पुण्यस्कन्धस्य पुरतः शततमामपि कला नोपैति सहस्रतमामपि शतसहस्रतमामपि कोटिशतसहस्रतमामपि संख्यामपि कलामपि गणनामपि उपमामप्युपनिषदमपि धृतिपदमपि नोपैति। अस्मिन्खलु पुनर्धर्मपर्याये भाष्यमाणे त्रिंशता भिक्षुणां सदेवमानुषासुरायाश्च प्रजाया अनुत्पन्नपूर्वाण्यनुत्तरायां सम्यक्संबोधौ चित्तान्युत्पन्नानि। अवैवर्तिकाश्चाभूवन्ननुत्तरस्याः सम्यक्संबोधेः सप्तानां च भिक्षुसहस्राणामनुपादायास्रवेभ्यश्चित्तानि विमुक्तानि॥

अथ खलु आयुष्मानानन्दो भगवन्तमेतदवोचत्। किं नामायं भगवन् धर्मपर्यायः कथं चैनं धारयामि। एवमुक्ते भगवानायुष्मन्तं आनन्दमेतदवोचत्। यनोद्धमनिशाविगु-

कमिति नाम धारय। सत्पुरुषविक्रिडितं बोधिसत्त्वचर्याविनिश्चयं नाम धारय। अर्थपारिपूरिं च नाम धारय॥

इदमवोचद्भगवान्। आत्तमना आयुष्मान्राष्ट्रपालः सदेवमानुषासुरगन्धर्वश्च लोको भगवतो भाषितमभ्यनन्दन्॥

इति पुण्यरश्मेः सत्पुरुषस्य पूर्वयोगसूत्ररत्नराजं समाप्तम्॥

आर्यराष्ट्रपालपरिपृच्छानाम महायानसूत्रं समाप्तम्॥



# Index des vers.[1]



1) Cet index a été préparé par le lama Amaravajra.

# Index des noms propres.

# Index des mètres.